# पुराण-परिचर्चा

प्रधानसम्पादकः
डॉ० एन्० आर्० कण्णन्

सम्पादिका
डॉ० शैलजा पाण्डेयः



राष्ट्रिय-संस्कृत-संस्थानम्

# PURAN-PARICHARCHA

## [ Puraneshu Bhartiya Sanskritih ]

## *NATIONAL SEMINAR*

**General Editor**
**Dr. N. R. Kāṇṇan**
Principal
Gangā Nāth Jhā Campus, Allahabad

**Edited by**
**Dr. Shailja Pandey**
Department of Veda & Puranetihas
Gangā Nāth Jhā Campus, Allahabad



**Rashtriya Sanskrit Sansthanam**
**(Deemed University)**
**Gangānātha Jhā Campus**
**Chandrashekhar Āzād Park**
**Allahabad-211002**
**2017-18**

# पुराण-परिचर्चा

## [ पुराणेषु भारतीया संस्कृतिः ]

## *राष्ट्रिया संगोष्ठी*

प्रधानसम्पादकः
डॉ० एन्० आर्० कण्णन्
प्राचार्यः
गङ्गानाथझापरिसरः, इलाहाबाद

सम्पादिका
डॉ० शैलजा पाण्डेयः
वेदविभागः पुराणेतिहासविभागश्च
गङ्गानाथझापरिसरः, इलाहाबाद



राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )
गङ्गानाथझापरिसरः
आजादोद्यानम्, प्रयागः-२११००२
२०१७-१८

डॉ० एन्० आर्० कण्णन्
प्राचार्यः
राष्ट्रिय-संस्कृत-संस्थानम्
मानित विश्वविद्यालयः
गङ्गानाथझा-परिसरः
भारतशासनस्यमानव-संसाधन-
विकासमन्त्रालयाधीनः



Dr. N. R. Kannan
Principal
Rashtriya Sanskrit Sansthan
Deemed University
Ganga Nath Jha Campus
Under the Ministry of Human
Resource Development, Govt. of India



## प्रधानसम्पादकीयम्

अयि भोः महाशयाः,

सम्प्रति राष्ट्रियसंस्कृतसंस्थानान्तर्गत-गङ्गानाथझापरिसरद्वारा "पुराणेषु भारतीया संस्कृतिः" इति शीर्षके आयोजितायां राष्ट्रियसंगोष्ठ्यां (विचारितविषयाणां) विमृष्टविषयाणाम् सङ्कलनपुरस्सरम् "पुराणपरिचर्चा" इत्याख्यायुतपत्रिका शोधपत्रात्मिका प्रकाशं नीयमाना सती समेषां विपश्चितां करकमलयोः समुपायनीक्रियते।

अस्या पत्रिकायां श्रीमद्भागवतादिविविधपुराणविषयेषु विभिन्नप्रान्तीयविद्वद्वरेण्यैः चर्चितान् महत्त्वपूर्णान् विषयान् संगृह्य निबन्धरूपेण प्रकाशयामः। विद्यापीठीयाध्यापकैः छात्रैश्च विविधभाषासु लिखिताः पुराणसंबद्धनिबन्धाः समाजोपकारकनिबन्धाश्च प्रकाश्यन्ते।

पुराणानां श्रवणे पौराणिकार्थानुसंधाने तत्कथाश्रवणे च बालकप्रभृतिमनुष्याणां सर्वेषां महान् आनन्दः त्वरया प्रवृत्तिश्च जायत इति पुराणानां वैशिष्ट्यं समाजे प्रसिद्धं चकास्ति। "बहुभ्यः श्रोतव्यम्", "बहुधा च वक्तव्यं", "लेखनान्तं पाण्डित्यम्" इत्यादिवचनानुसारम् विविधविषयशोधपूर्णेयं पत्रिका अनुसन्धानशीलानां विदुषां हृदयङ्गमा सती शोधछात्राणां व्युत्पित्सूनां सामान्यछात्राणां च मार्गदर्शकत्वेन च महान्तमुपकारमादध्यात्।

अस्याः संगोष्ठ्याः प्रधानसंरक्षकेभ्यः राष्ट्रियसंस्कृतसंस्थानीयकुलपतिमहोदयेभ्यः आचार्यपरमेश्वरनारायणशास्त्रिमहोदयेभ्यः आदौ कृतज्ञतां निवेदयामि।

अस्याः पुराणसंगोष्ठ्याः सञ्चालनं तथा शोधपुस्तकप्रकाशनादिव्यवस्थां च निर्व्यूढवतीभ्यः सम्पादिकाभ्यः डॉ० शैलजापाण्डेयमहोदयाभ्यः धन्यवादान् व्याहरामि।

इति सुधीविधेयः

(डॉ० एन्०आर्० कण्णन्)
प्राचार्यः

# भूमिका

इह खलु जगति विद्वत्समाजे 'वादे वादे तत्त्वबोधः'' इति न्यायानुसारं सर्वेषां मनुष्याणां शास्त्रीयविचारगोष्ठ्याः आयोजनेन तेषु तेषु विषयेषु विशेषजिज्ञासाद्वारा महान् ज्ञानलाभः भवतीति विदितमेव विद्वद्भिस्सर्वैः। तदिह जानाति इच्छति यतते इति क्रममनुसृत्य आदौ ज्ञानं, तदनु जिज्ञासा जायते तदनु प्रयत्नः ततः प्रवृत्तिरिति स्थितिः। इयञ्च प्रवृत्तिः विशेषतो विषयावगत्यै मानवान् तदन्वेषणाय प्रेरयति। अन्वेषणानन्तरं विमर्शः क्रियतेः विषये च विमृष्टे सति अज्ञातस्य ज्ञानं, ज्ञातस्य च विषये अधिकाधिकज्ञानं, प्राप्तज्ञानस्य विश्लेषणादिकञ्च अनुभूयते विद्वज्जनैः। आदिकालादेव प्राचीनकाले ऋषयः मुनयश्च सत्यं ज्ञातुं तपः अकुर्वन्। परवर्तिकाले अधुनापि विद्वांसः ज्ञानमार्गे अनवरतरूपेण प्रयत्नशीलाः सन्ति। एवं शोधप्रक्रिया सततगतिशीला भवति।

राष्ट्रियसंस्कृतसंस्थानस्य (मानितविश्वविद्यालयस्य) प्रयागे स्थितः गङ्गानाथझापरिसरः प्रारम्भादेव शोधप्रधानः वर्तते। अत्र २०१७ तमे ख्रीष्टाब्दे पुराणेतिहासविभागपक्षतः 'पुराणेषु भारतीया संस्कृतिः' इति विषयमधिकृत्य संगोष्ठी आयोजिता। अस्यां सङ्गोष्ठ्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालये पुराणेतिहासविभागाध्यक्षचरैः आचार्यैः श्रीबापटमहोदयैः स्वकीयमुख्यभाषणेन सङ्गोष्ठ्याः शोभा आसादिता। अतः तेभ्यः आदौ कृतज्ञतामाविष्करोमि।

एवं काशीहिन्दूविश्वविद्यालये मीमांसाविभागाध्यक्षैः विविधशास्त्रपारङ्गतैः आचार्यैः श्री एन्० आर्० श्रीनिवासन् महोदयैः नूतनशैल्या पुराणशब्दार्थादिनिर्वचनपुरस्सरं सरलया शैल्या सविमर्शं विषयप्रतिपादनपूर्वकं सङ्गोष्ठी विद्वज्जनरञ्जकत्वेन सफलीकृत्य अन्वगृह्णन्। अतः तेभ्यः प्रणतिततयः समर्प्यन्ते।

अपि स, अस्यां सङ्गोष्ठ्यां विविधस्थानेभ्यः परिसरेभ्यः विश्वविद्यालयेभ्यश्च आगताः स्वस्वविषयेषु निष्णाताः विद्वांसः शोधछात्राश्च भागं गृहीत्वन्तः। एवमियं पौराणिकी सङ्गोष्ठी तेषां शोधपत्रप्रस्तुत्या सफला सञ्जाता।

ईदृशीं राष्ट्रियसङ्गोष्ठीं कर्तुं राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिमहोदयाः प्रो० परमेश्वर-नारायणशास्त्रीमहाभागाः अनुमतिं प्रदत्तवन्तः। अतः तेभ्यः आदौ सप्रणामं धन्यवादान् व्याहरामि। अस्य परिसरस्य प्राचार्यवर्यैः न्यायमीमांसाप्रभृतिविविधशास्त्रमर्मज्ञैः विद्वद्भिः राष्ट्रियसंस्कृतसंस्थानस्य कुलपतिचरैः डॉ० एन्० आर्० कण्णन् महाभागैः सङ्गोष्ठ्याः आध्यक्ष्यं निर्व्यूढम्। तेषां संरक्षणे ङ्गोष्ठी सुष्ठु सम्पन्ना। अतोऽहं तेभ्यः सनमोवाकं धन्यवादान् समर्पयामि। ये ये विद्वांसः ोधछात्राश्च स्वकीयवैदुष्यपूर्णशोधपत्रैः सङ्गोष्ठीं सफलीकृतवन्तः अहं तान् धन्यवादान् पयामि। ये परिसरीयाः आचार्याः शोधछात्राश्च अस्मिन् ज्ञानयज्ञे मम सहाय्यं कृतवन्तः, अहं

तान् प्रति कार्तज्ञ्यमर्पयामि अस्य ग्रन्थस्य प्रकाशनं 'अक्षयवटप्रकाशनं' कृतवान्। अतः तेभ्यः धन्यवादान् वितरामि।

एवं सङ्गोष्ठ्यां चर्चितविषयस्य सर्वतोभावेन विकासाय पौराणिकसङ्गोष्ठ्याः पत्रिकां सम्मुद्राप्य विदुषां समक्षं प्रस्तौमि।

भवदीया

शैलजा पाण्डेय

□□

**पुराणपुरुषाय प्रणामाञ्जलिः**

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप।।

–गीता ११।३८

# विषयानुक्रमणिका

□□

# पुराणेषु राजनीतिविद्याविमर्शः

–विपिनकुमार द्विवेदी
शोधच्छात्रः
गङ्गानाथ-झा-परिसरः, इलाहाबाद

पुराणेषु राजधर्मस्य विवरणं बहुषु स्थलेषूपलभ्यते। मत्स्यपुराणे हि चतुर्दशसु (२१४-२२६) अध्यायेषु अभिषिक्तस्य राज्ञः कर्त्तव्यवर्णनस्य प्रसङ्गे राज्ञः उत्पत्ति कथं जायते, तस्य कियन्तो भवन्ति सहायकाः कियन्ति चाङ्गोपाङ्गानि अपेक्षितानि, राजरक्षायाः कानि सन्ति साधनानि, सामदण्डभेदनीतेः कदोपयोगः कर्त्तव्यः, राजकुमारस्य शिक्षा दीक्षा च कीदृशी भवितुमर्हति? इत्यादीनां विषयाणां विस्तृतं विवेचनं जातमस्ति। एवं स्वामात्य-जनपद-दुर्ग-दण्ड-कोष-मित्राणां निर्देशानन्तरं दिव्यान्तरीक्षाणामुत्पातानां शान्तिविधानं राज्ञः कर्त्तव्यमादिष्टम्। किञ्च कृपणानाथवृद्धविधवास्त्रीणां योगक्षेमार्थं वृतेः विधानं परिपालनं च राज्ञोऽनिवार्यकार्यं निर्णीतमास्ते, यद्यत्वे समुन्नतस्य राष्ट्रस्य सूज्ज्वलमादर्शमयं रूपं विद्यते–

**कृपणानाथवृद्धानां विधवानाञ्च योषिताम्।**
**योगक्षेमं च वृत्तिं च तथैव परिकल्पयेत्।।**

**–म०पु० २१४।६२**

महाभारतेऽपि देवर्षिणां नारदेन महाराजाय युधिष्ठिराय मूकान्धपङ्ग्वङ्गहीनबान्धव-विहीनानाथसन्यासिनां पितृवत् पालनमादर्शराजधर्मम् उपदिष्टोऽस्ति–

**कच्चिदन्धांश्चमूकांश्च पङ्गून् व्यङ्गानबान्धवान्।**
**पितेव पासि धर्मज्ञ! तथा प्रव्रजितानपि।।**

**–स०प० ४।१२५**

अग्निपुराणे दशसु (२१८-२२७) अध्यायेषु राजधर्मस्य विस्तृतं विवेचनं प्रस्तुतं विद्यते, यत्र राज्याभिषेकप्रसङ्गेऽभिषेकनिमित्तमनेकेषां पौराणिकानां मन्त्राणामुपयोगः कृतोऽस्ति तथा सहायसम्पत्ति-अनुजीवित्त-राजधर्म-दण्डप्रणयनादीनां सम्यग् विवेचनं विद्यते। अपिच पञ्चदशसु (२३८-२५२) अध्यायेषु श्रीरामद्वारा लक्ष्मणाय राजधर्मस्यातिसुन्दर उपदेशो दत्तो वर्तते। अत्रत्या राजनीतिः कौटिलीयार्थशास्त्रस्य बहुशोऽनुकरणं करोति। ततत्र्यः प्रस्तुतः कामन्दकीयनीतिसारोऽग्निपुराणस्य संग्राहकनीत्या सह सामञ्जस्यं भजते।

गरुडपुराणे अष्टसु (१०८-११५) अध्यायेषु राजतन्त्रसम्बद्धानां धर्मार्थकामसम्बन्धिनां विषयाणामत्युत्तमो विचारः प्रस्तुतो विद्यते। अस्य नीतिसारप्रकरणं नैतिकशिक्षायै महदुपयोगि उपादेयं संग्रहणीयञ्च वर्तते।

मार्कण्डेयपुराणस्य द्वयोः (१६-१६) अध्याययोः मदालसाद्वारास्वपुत्रायालर्कायाति मनोहरोमहत्त्वपूर्णश्च राजधर्मस्योपदेशः कस्य राजनीतिनिपुणस्य नरस्य हर्षाय न स्यात्। वायुपुराणे च ९९ अध्याये राजवंशवर्णनप्रसङ्गे राजनीतेर्वर्णनं समीचीनतरं विद्यते। एवं मत्स्याग्निगरुड-मार्कण्डेयपुराणातिरिक्ते विष्णुधर्मोत्तरोपपुराणेऽपि (२१९) वरुणपुत्रेण पुष्करेण परशुरामं प्रति वर्णिता पुष्करनीतिः राजव्यवस्थायामादर्शमयं महत्त्वमुपस्थापयति।

महाभारतस्य शान्तिपर्वणि एकं राजधर्मपर्वैवास्ति, यत्र भगवतः श्रीकृष्णस्य प्रेरणया युधिष्ठिरेण पृष्टो भीष्मपितामहः शरशय्यायां शयानः स्वानुभवप्राक्तनकथानकपूर्वकं विशदतया अत्युतमं राजनीतेरुपदेशं प्रदत्तवान्, यस्य प्रचारप्रसाराभ्यामद्यत्वेऽपि भारतस्य सर्वविधकल्याणं नूनं स्यात्। एषां विचाराणां परिशीलनेन पौराणिकराजधर्मस्य स्वरूपं सम्यगभिव्यक्तं भवति। पुराणे हि राष्ट्रस्य समुज्वलआदर्श; प्रस्तुतो वर्तते, यत्र न कदाचिदपि कोऽपि पुरुषः स्वाधिकाराद् वञ्चितो भवितुमर्हति सर्वकल्याणकारकस्य समुन्नतराष्ट्रस्य विकसितं रूपमिदमेवास्ति यत्।

सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिददुःखभाग् भवेत्।।

दीप्त्यर्थकाद् राज् धातोःकनिन् प्रत्यये कृते राजन् शब्दो निष्पद्यते, यस्य शाब्दिकोऽर्थो भवति दीप्यमानः प्रकाशमानः प्रतापवान् वा। वेनपुत्रस्य पृथोः प्रसङ्गे पौराणिकं प्रतिपादनं वर्तते यत् प्रजानामनुरञ्जनात्तस्य नाम राजा जातः। अतएव कलिङ्गसाम्राज्ये खारवेलेन स्वकीये शिलालेखे(ई०पू० १६५) प्रोक्तमस्ति यदहं प्रजानां रञ्जनं करोमि। प्रजायाः अनुरञ्जनं राज्ञो विधेयकार्येषु एकतममस्ति। वेनेन याः प्रजाः विरक्ताः कृताः आसन् ताः एव पृथुना अनुरक्ताः कृताः।-

पित्राऽपरिजितास्तस्य प्रास्तेनानुरञ्जिताः।
अनुरागात्ततस्तस्य नामराजेत्यजायत।।

-वि०पु० १।१३।४८

पुराणेषु प्रोक्तमस्ति,यदा भगवतो निन्दया मुनिगणेन पापी राजा वेनो निहतः तदा सर्वत्रोत्थितं धूलिमालोक्य जनप्रश्नानन्तरं तैः कथितं यद् राष्ट्रस्याराजकत्वादत् दीनाश्चौरा भूत्वा परेषां धनानि लुण्ठन्ति तेषां परधनापहारिणां चौराणामुत्पातेनायं धूलिः उड्डीयमानो दृश्यते।

ततोऽराजकतां निवारयितुं यथा काष्ठे मथ्यमाने धूमरूपेण तस्य मले निष्क्रान्तेऽग्निरुत्पद्यते तथैव महर्षिभिर्वेनशरीरे मथ्यमाने ततो निषादरूपेण तत्कल्मषे निर्गते पश्चादग्निरिव देदीप्यमानः पृथुरुत्पन्नः। तस्य हस्ते विष्णोश्चक्रचिह्नमालोक्य तं विष्णोरंशं मत्वाविधेराज्ञया राज्येऽभ्यषिञ्चन् महर्षयः-

समागम्य ततो वैण्यमभ्यषिंचन् नराधिपम्।।-वि०पु० १।१३।४४

राज्ञां प्रयोजनीयतासम्बन्धे जिज्ञासया वसुमनसा पृष्टो वृहस्पतिरुक्तवान् यत् लोके यो हि धर्मो दृश्यते तन्मूलकारणमस्ति राजैव। राज्ञो भयेन प्रजा नान्यं पीडयति। यदा प्रजा मर्यादां त्यजति लोभाकृष्टा च जायते तदा राजैव धर्मद्वारा तत्र शान्तिं स्थापयति, स्वयं प्रसन्नतापूर्वकं स्वतेजसा च प्रकाशते–

**राजमूलो महाप्रज्ञ धर्मो लोकस्य लक्ष्यते।**
**प्रजा राजभयादेव न खादन्ति परस्परम्।।६८।।**
**राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः।**
**जले मत्स्यानिवाभक्ष्यन् दुर्बलं बलवत्तराः।।६८।१६।।**

राजा हि प्रजानां प्रधानं शरीरं प्रजाऽपि राज्ञोऽनुपमं शरीरमस्ति। राजानं विना देशो देशवासिनो वावस्थातुं न शक्नुवन्ति तथा देशं देशनिवासिनो विना राजापि न वर्द्धते। अतः उभयोः सौमनस्यामावश्यकम्–

**राजा प्रजानां प्रथमं शरीरं प्रजासु राज्ञोऽप्रतिमं शरीरम्।**
**राज्ञा विहीनाः न भवन्ति देशा देशैर्विहीना न नृपाः भवन्ति।।६८।५८।।**

एवं वाल्मीकिरामायणेऽपि विशदतया राज्यस्य विवेचनं कृतमस्ति। राष्ट्रस्य समाजस्य च प्रत्येकशाखायां मर्यादारक्षायै एकस्य शासकस्य नेतृत्वावश्यकता भवति, यतोहि शासननेतृत्वाभावे सामाजिकमर्यादाभङ्गस्य स्वाभाविकी सम्भावना भवति। शासकनेतृत्वं विना कश्चिदपि समाजः सुचारुरूपेण न संचलितुमर्हति, शासनभयादेव समाजस्य नियमबद्धता स्थिरा तिष्ठन्ति,अन्यथा उच्छृङ्खलतया मर्यादाभ्रष्ट्रस्याशङ्का वर्तते। अत एव राष्ट्रहिताय शासकरूपेणैकस्य धार्मिकस्य शक्तिशालिनो राज्ञ उपादेयता प्रतिपादिताऽस्ति पुराणेषु महाभारते च।

## राज्ञि देवत्वभावना

पौराणिकैरुदाहरणैः सङ्केतो मिलति यद् राजा प्रायो विष्णोरंशेन उत्पद्यते। महाराजस्य पृथोः सम्बन्धे प्रोक्तमस्ति यत् तस्य दक्षिणे हस्ते चक्रचिह्नं विलोक्य तं विष्णोरंशं मत्वा ब्राह्मणः परमानन्दो जातः। त्रेतायुगे दैत्यैः पराजिताः भूत्वा शरणमापन्नाः देवाः विष्णुना प्रोक्ता यद् राजर्षेः शशादपुत्रस्य पुरञ्जयस्य शरीरेऽहम् अंशमात्रेण स्वयमवतीर्णो भूत्वा सकलान् दैत्यान् हनिष्यामि। राज्ञि देवत्वभावना देवेष्वप्युपलभ्यते। स्मृतौ तु अष्टानां लोकपालानां मात्राभिर्जायते नृप इत्युक्तम्। शतपथब्राह्मणे राजा प्रजापते प्रत्यक्षप्रतिनिधिरूपेण वर्णितोऽस्ति। मनुस्मृतौ राज्ञो देवत्वनिर्धारणसिद्धान्तस्य स्पष्टीकरणं प्राप्यते। राजा बाल्यावस्थायाः किन्न स्यात्, तं साधारणं मनुष्यं मत्वा तस्य सम्माने कथञ्चिन्न्यूनता न कर्त्तव्या, यथोहि राजा मनुष्यरूपेण साक्षाद्देवता एव भवति। एतेन देवतावज्ञायामधर्मादयोऽदृष्टदोषाः प्रादुर्भवन्ति–

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति।।

-मनु०स्मृति ६।८

## राज्योत्पत्तिः

राज्योत्पत्तिः ब्रह्मपुत्रस्य स्वायम्भुवमनोः समयादेवाभवत्, यतः पित्रा स्वायम्भुव एव प्रथमो मनुर्मतः। स्वायम्भुवमनोः द्वौ पुत्रौ बभूवतुः प्रियव्रत उत्तानपादश्च। द्वावपि बलवन्तौ धर्मरहस्यज्ञौ। प्रियव्रतस्य साम्राज्यसीम्नो विषये उक्तमस्ति यत् स सप्तद्वीपाया वसुन्धराया राजाऽऽसीत्। यतोहि तेनैव समस्तां पृथिवीं सप्तसु द्वीपेषु विभज्य तेषु आग्नीध्रादयः सप्त पुत्रा क्रमशोऽभिषिक्ताः। ज्येष्ठ-आग्नीध्रो जम्बूद्वीपस्य राजाऽऽसीत्। तेनापि जम्बूद्वीपं नव भागेषु विभज्य तत्र नाभिप्रभृतीन् नव पुत्रानभिषिच्य विभज्य तत्र शासनं कृतम्। वेनपुत्रो हि राजा पृथुः स्वधनुष्कोट्या निम्नोन्नततामिमां भूमिं समतलां कृतवान् तत्र पुर-ग्रामादीन् निर्माय पृथिवीपालनपूर्वकं प्रचुरदक्षिणासम्पन्नानामनेकेषां महायज्ञानामनुष्ठानं कृत्वान्। विष्णुपुराणे प्रोक्तमस्ति यत् महर्षिभिर्यदा राजा पृथू राज्यपदेऽभिषिक्तस्तदा लोकपितामहेन ब्रह्मणा नृपेभ्यः क्रमशो राज्यानां वितरणं कृतम्, तैरद्यापि धर्मतः समस्तां पृथिवीं परिपाल्यते-

यदाभिषिक्तः स पृथुः पूर्वं राज्ये महर्षिभिः।
ततः क्रमेण राज्यानि ददौ लोकपितामहः।।
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना।
यथाप्रदेशमद्यापि धर्मतः परिपाल्यते।।

-१।२२।१, १३

एकदा पृथिवी राजानं पृथुमुवाच, नरनाथ! मया ये ओषधयः परिभक्षिताः, यदि भवदिच्छा स्यात्तर्हि तानि दुग्धरूपेण दातुं प्रभवामि, परं प्रजाहिताय कश्चनैवविधो वत्सः प्रस्तोतव्यो यद्वात्सल्यादहं तान् दुग्धरूपेण निःसारयेयम्, तथा निम्नोन्नतां मां सर्वत्र समतलां कुरुष्व, येनाहमुक्तमोत्तमौषधीनां बीजरूपं दुग्धं सर्वत्र समुत्पादयेयम्। तत स स्वायम्भुवं मनुं वत्सं विधाय स्वहस्ते एव पृथिवीतः प्रजानां हिताय समस्तं धान्यं दुदोह। तदन्नाधारेणाद्यापि प्रजा जीवन्ति। तदनु प्रजाजनाः स्वकीयविकाससाधनरूपे कृषिकर्मणि प्रवृत्ताः-

स कल्पयित्वा वत्सं तु मनुं स्वायम्भुवं प्रभुः।
स्वे पाणौ पृथिवीनाथो दुदोह पृथिवीं पृथुः।।

-वि०पु० १।१३।८७

विहितकर्मभिः समाजस्य सञ्चालने विघ्नकर्तृणां दुर्जनानां शस्त्रास्त्रद्वारादमनं राज्ञाऽऽवश्यकं कर्त्तव्यं विद्यते। दुष्टेभ्यो दण्डदाने साधूनां संरक्षणे एव राजा-प्रजयोरुभयोः कल्याणं निश्चप्रचम्।

दुष्टेभ्यो दण्डदानात् सज्जनानां संरक्षणञ्च राजा स्वाभिमतं लोकं प्राप्नोति–

दुष्टानां शासनाद्राजा शिष्टानां परिपालनात्।
प्राप्नोत्यमिताल्लोकान् वर्णसंस्था करोति यः।।

–वि०पु० ३।७।२७

चातुर्वर्ण्यधर्मवर्णनप्रसङ्गे राजानं सगरं प्रति महर्षेरौर्वस्य कथनमस्ति यत् शस्त्रास्त्रधारणं पृथिवीसंरक्षणं च क्षत्रियजातेराजीविकारूपमनिवार्यकर्म विद्यते–

शस्त्रा जीवो महोरक्षा प्रवरो तस्य जीविका।
तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम्।।

–वि०पु० ३।८।२७

अस्यामभिप्रायोऽस्ति यत् समाजव्यवस्थायाः सुचारूततया सञ्चालनं शक्तिशालिनां क्षत्रियाणामेव प्रधाने विध्योऽधिकारो वर्तते। अतः क्षत्रियाणां राज्ञां धर्मतः प्रजापालनपूर्वकं समाजव्यवस्था-सञ्चालनमनिवार्यं कर्त्तव्यमस्ति।

## राष्ट्रियभावना

राष्ट्रियताया या निर्मलाधरा पुराणेषु प्रवाहितास्ति, सा अतुलनीयास्ति, भारतवर्षीयप्रजाजनानां धर्माचरण-कर्मयोग-निष्कामसद्व्यापारैर्यौ ऐहलौकिक-पारलौकिकौ च अभ्युदयानिःश्रेयसौ उपलभ्यौ स्तः, ताभ्यां स्वर्गीयदेवगणाऽपि आत्मनो भारतीयजनतापेक्षया हीनौ अनुभवन्ति।

पुराणेषु भारतभूमिगौरववर्णनप्रसङ्गे देवानां कथनमस्ति यद् जीवैः सहस्रजन्मानन्तरं महत्पुण्योदये सति भारतवर्षे जन्मग्रहणस्यावसरो लभ्यते। देवा निरन्तरमिदमेव चिन्तयन्ति यद् यैः स्वर्गापवर्गेपर्मार्गभूते भारतवर्षे जन्म गृहीतमस्ति, तथा ये फलाकांक्षारहिताः कर्माणि परमात्मनि समर्प्य निर्मलाः सन्तः तस्मिन्नन्ते लीयन्ते तै देवतापेक्षया धन्यतमाः सन्ति।

स्मृतिषु राष्ट्रियचरित्रस्यादर्शभूतानामेतद्देशप्रसूतानां ब्राह्मणानां चरितेभ्यो विश्वस्य सर्वैप्राणिभिः शिक्षाग्रहणस्य परामर्शो दत्तोऽस्ति। राष्ट्रीयचरित्रस्यादर्शताभिमानिनां स्मृतिकारणां दृष्टौ भारतवर्ष-विश्वस्य गुरूरस्ति। एवं संस्कृतकविभिः राष्ट्रनिहिता गौरवभावना महत्या ओजस्विन्या वाण्या व्यक्तिकृताऽस्ति। कविकुलकलाधरेण कालिदासेन हिमालयं प्रति यो राष्ट्रियभावनयाः आदर्श उपस्थापितोऽस्ति, तेन तस्य हृदयमहत्त्वं लक्ष्यते। कविना देवतात्मनगाधिराज-पृथिवीमानदण्ड-इत्येभिस्त्रिभिः-विशेषणैर्विशिष्टं कृत्वा अत्युत्कृष्टं गौरवं राष्ट्रियस्वाभिमानं च व्यक्तीकृतमस्ति।

## निष्कर्षः

उपरिवर्णितराजनीतिविवरणैः ज्ञायते यत् पौराणिकयुगे एकमात्र प्रजातन्त्रं शासनस्यैवा-

धिपत्यमासीत्। प्रजाजनानां सुखसुविधायाः सर्वत्रादर्शमयी व्यवस्थाऽऽसीत्। राजसु स्वार्थभावनायाः सर्वथा अभाव आसीत्। धर्माचरणस्य पालनं राज्ञामनिवार्यं व्रतमासीत्। राज्ञां धर्माचरणेन पुण्यप्रतापेन च भारतवर्षं स्वर्गात् श्रेष्ठतममासीत्। राज्ञां धर्माचरणेन प्रभावितो जनसमुदायोऽपि धर्मिष्ठ आसीत्, यतो राज्ञां व्यापारानुसारमेव प्रजानां प्रवृतिर्भवति–

**राज्ञि धर्मणि धर्मिष्ठा पापे पापाः समे समाः।**
**राजानमनुवर्तन्ते यथा राजा तथा प्रजाः।।**

**–भोजप्र० ४४**

प्रजाभ्यः करग्रहणं स्वल्पमात्रमासीत्। धर्महीनस्य स्वार्थिना नास्तिकस्य च राज्ञो वधेऽविधेयो नासीत्। आततायिनो राज्ञो वेनस्य वर्णन प्रसङ्गे उक्तं वर्तते यद् ऋषिभिर्वारितोऽपि राजा वेनो यदा स्वदुराचरणं न तत्याज तदा मुनिगणैर्णीश्वरनिन्दकः स राजा मन्त्रद्वारा पवित्रकृतकुशैर्निहतः।

एतेन निष्कर्षः निःसरति यद् राजधर्माचरेणेन सह राजानो निरन्तरं प्रजापालने दत्तावधाना आसन्। राष्ट्रेऽधार्मिकस्य स्वार्थिनो राज्ञः प्रयोजनीयता नासीत्। दुराचारिणो नास्तिकस्य मदान्धस्य वा राज्ञो राज्यच्युतौ हत्यायां च प्रजा एकमता भवतिस्म। पौराणिकं राजतन्त्रं राज्यं गणतन्त्रराज्यापेक्षया कस्यामपि मात्रायां न्यूनतरं नासीत्, प्रजाजनानां सुखशान्तये राजानः स्वार्थं विहाय सदा चेष्टन्तेस्म, प्रजाभिश्च राजा देववत् मन्यतेस्म, समाद्रियतेस्म, तदनुकूलमेव च व्यवह्रियतेस्म। चन्द्रगुप्त-मौर्यस्यैकाधिपत्यं, साम्राज्यमनियन्त्रितं नासीदिति स्पष्टयता कौटिल्येनापि प्रोक्तमस्ति यत् प्रजानां हिते सुखे च राज्ञोऽपि हितं सुखं वा वर्तते, नात्मनः परं प्रजानां प्रियकार्यसम्पादनमेव राज्ञो हितकरं प्रियं च भवति–

**प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।**
**नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्।।**

**–अ०शा० १।१९**

□□

# पुराणेषु पर्यावरणम्-एकसमीक्षा

-नीलमाधवः प्रधानः
शोधच्छात्रः
श्रीसदाशिवपरिसरः, पुरी

पुराणानि संस्कृतवाङ्मयस्य एकः अविच्छेद्यः अङ्गः। यतो हि अत्र प्रायशः सर्वे विषयाः न्यूनाधिकरूपेण चर्चितं वर्तन्ते। पर्यावरणविषयिकी या समस्या, तामाश्रित्य यत् चिन्तनं परिदृश्यमानं भवति तादृशस्य चिन्तनस्य यद्यपि प्राचीनकाले आवश्यकता नासीत् तथापि प्राचीनैः ऋषिभिः कालावस्थादृष्ट्या सर्वमपि स्वस्य तपबलेन ज्ञातवान्। युगस्य परिवर्तनक्रमे जनानां चारित्रिक-व्यवहारः दृष्ट्या च पर्यावरणस्य असन्तुलनं भविष्यति इति विचार्य विचिन्त्य च समाजस्य पर्यावरणस्य च संरक्षणायां निर्धारितायां व्यवस्थायां केचनुपायाः वर्णिता पुराणेषु। यत्र पर्यावरणस्य सङ्कल्पना, तस्य विनाशस्य कारणानि, संरक्षणोपायाश्च एतत् सर्वमपि दर्शितं भवन्ति।

**पर्यावरणशब्दस्यार्थः तत् स्वरूपश्च**

संस्कृतवाङ्मये यद्यपि पुराणेषु प्रत्यक्षरूपेण पर्यावरणशब्दः नोपलभ्यते, परन्तु आङ्ग्लभाषायाः 'Environment' इति शब्दास्यार्थः हिन्दीभाषायां पर्यावरण इत्युच्यते। संस्कृतवाङ्मये, विशेषेण पुराणानां परिशीलनेन ज्ञायते यत् न केवलं पुराणेषु अपितु सर्वत्र संस्कृतसाहित्ये आवरणशब्दस्य प्रयोगस्तु प्राचुर्येण उपलभ्यते। आवरणस्य व्युत्पत्तिः तावत् आ+वृ-ल्युट् करणे आवरणशब्दस्य निष्पत्तिर्भवति। कोशे तावत् परिशब्दस्यार्थः अनेकरूपेण उपलभ्यते। परिशब्दस्तु मूलतः अव्ययः भवति। उपसर्गत्वेनाऽपि प्रयुज्यते। अत्र एतस्यार्थः परितः, अभित इति भवति। धातोः प्राग् अपि एतस्य प्रयोगो भवति। यथा पर्युपसर्गपूर्वकम् आवरणं पर्यावरणमिति। अस्माकं परितः यानि यानि उपस्थितानि पञ्चभूतादीनि अन्यानि वस्तुनि च तेषां सर्वेषां समावेशो पर्यावरणे भवति। वर्तमानसमये पर्यावरणे वायु-जल-भूमि-वनस्पति-वृक्ष-लता-पशु-पक्षी-मानवदीनां मुख्यरूपेण गणनां क्रियते। प्राचीनकालिकपर्यावरणस्य कीदृशी अवधारणा भवतीति विषये आवरणानां द्विविधा सङ्कल्पना तत्र पुराणेषु प्राप्यते तद्यथा-

एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया।
मह्यादिभिश्चावरणैष्टभिर्बहिरावृतम्।।

-श्रीमद्भा० २।१०।३३

पृथिवी-जल-तेज-वायु-आकाश-अहङ्कार-महत्तत्त्व-प्रकृतय इति सन्त्यष्टावरणानि। सप्तावरणेषु प्रकृतेः ग्रहणं न क्रियते। वस्तुतः पुराणेषु यत् अष्टावरणनां कल्पना भवति तत्रापि मुख्यरूपेण सप्तावरणान्येव स्वीकृतवान्। यदा पुरुषस्य सान्निध्येन प्रकृतिः क्षुभिता भवति तदा एते सप्तावरणानि क्रमेणोत्पद्यन्ते। तैः साकं प्रकृत्याः संयोगेन अष्टावरणानि भवन्ति, अतः मूलतः

कोऽपि भेदः नास्त्यत्र संख्याविषये। सृष्टेः कारणं तु मूलतः प्रकृत्येव यतो हि पुरुषस्तु नित्यशुद्धबुद्धमुक्तश्च।

## पुराणेषु पर्यावरणस्य वर्णनम्

पुराणानुसारं पुरुषाधिष्टतत्त्वात् प्रधानानुग्रहेण वा महदाद्याः विशेषान्ताः अण्डमुत्पादयन्ति। तस्मिन्नेवण्डे साद्रि-द्वीप-समुद्र-ग्रहगणसहिताः सर्वे लोकाः, विविधाः प्राणिनश्च समुत्पन्नाः। यथा विष्णुपुराणे-

वारिवह्न्यनिलाकाशैस्ततो भूतादिनाबहिः।
वृत्तं दशगुणैरण्डं भूतादिर्महता तथा।।
अव्यक्तेनावृतो ब्रह्मंस्तैः सर्वैः सहितो महान्।
एभिरावरणैरण्डं सप्तभिः प्राकृतैवृतम्।।
नारिकेलफलस्यान्तर्बीजं बाह्यदलैरिव।।

-विष्णुपुराण २।५९।६०

अतः यदि किमपि प्रदूषणं भवति तत्त्वेतेषु प्रकृतिविकारेष्वेव। पर्यावरणेनापि एतत् एव विषयाः सम्बन्धाः अष्टावरणयुक्ता प्रकृतिः पुराणमतेन नारायणस्य अन्यतमं स्वरूपं भवति। पर्यावरणस्य कृते एषा दृष्टिः सदानुकूला भवति। यथा-

स्वं वायुमग्निं सलिलं मही च,
ज्योतींषि सत्त्वानि दिशो द्रुमाद्रीम्।
सरित्समुद्रश्च हरेः शरीरं,
यत् किञ्चभूतं प्रणमेदनन्यः।।

-श्रीमद्भ० ११।२।४२

वर्तमानसमये उत्कोच-यौतुक-मद्यपान-आतङ्कवाद-कर्त्तव्योपेक्षा-भ्रष्टचार-जनसंख्यावृद्धि-पारस्परिकद्वेष-अपराधः इत्यादयः अनेकाः समस्याः प्रादुर्भूता, येन देशस्य समाजस्य च विघटनं सन्निकटमेव परिलक्ष्यते। एतासां समस्यानां समाधानं पुराणैः भवति।

अष्टावरणेषु प्रथमं स्थानं भवति पृथ्वी। पुराणानुसारं पृथिव्याः प्रधानो गुणः गन्धः एव भवति। अत एव कथ्यते गन्धवती पृथ्वी। अस्याः कारणं जलं, जलस्य तेजः, तेजसः वायुः, वायोः आकाशच। अतः एतेषां समेषामाकाशादिनां कारणानां शब्दादयः ये गुणाः तेऽपि पृथिव्यां भवति। यथा-

शब्दस्पर्शाश्च रूपं च रसोगन्धश्च पञ्चमः।
भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्ववेदिभि।।

-पद्मपु०, स्वर्गखण्डे ३।४

पृथ्वीमधिकृत्य यत् द्वीपवर्ष-पर्वत-नदनदी-समुद्र-वनानां विवरणं तत्र प्रमाणत्वेन पुराणे विद्यमानाः भवन्ति। अस्याः पृथिव्याः विषये पद्मपुराणे द्वीपादिविभागमपि वर्णितं वर्तते। यथा–

**एवं सुदर्शनो द्वीपो दृश्यते चक्रमण्डलः।**
**द्विरंशे पिप्पलस्तस्य द्विरंशे च शशो महान्।।**
**सर्वौषधीः समादाय सर्वतः परिवारितः।**
**आपस्ततोऽन्या विज्ञेयाः शेषः संक्षेप उच्यते।।**

**–पद्मपु०, स्वर्गखण्डे ३।१४।१६**

पृथ्वीमधिकृत्य अनेकानि आख्यानि पुराणेषु वर्णितानि सन्ति। यस्य सम्यक् अनुशीलनेन इतोऽपि अनेकानि तथ्यानि बहिरागच्छति।

द्वितीयमावरणं रूपेण जलं विद्यते। शब्दस्पर्शरूपरसाः चत्वारोऽप्सु गुणाः। जलं तु महत्त्वपूर्णं घटकम्। जलमेव जीवनम्। तदेव नारदीयपुराणे जलं देवत्वेन पितृत्वेन च उक्तम्। यथा–

**आपो देवगणा प्रोक्ताः आपः पितृगणास्तथा।**
**तस्मादस्य जलं देवं पितॄणां हितमिच्छया।।**

**–ना०पु०**

तृतीयावरणरूपेण तेजस् इति विराजते। यस्मिन् शब्दस्पर्शरूपेतिगुणत्रयं भवति। तथापि तेजसः प्राधान्यम्। तेजस्तत्त्वस्य प्रधाने रूपेऽग्नि सूर्यो भवति। स्कन्दपुराणे तावत् एतस्य तेजसः वर्णनं दृश्यते। यथा–

**स्वयम्भूः तपस्तप्त्वा दिव्यंवर्षशतं महत्।**
**सन्तस्थो व्याजहाराऽध भूभुर्वः स्वरिति श्रुतिः।।**
**श्रुतियोगात्तु मनसः पश्चादग्निरजायत्।**
**अधोमुखः पपाताग्निः पृथ्वीं निर्दहन् यदा।।**
**पाणिभ्यां ब्रह्मणा सोऽग्निभूमेरूर्ध्वं निवेशितः।**
**ततो दक्षिणहस्तेव वेधामग्निः प्रणीयते।।**

**–स्क०पु०, अव०ख० ४।१२।१४**

आवरणेषु तृतीयावरणं स्थानं वायुः एव स्वीकरोति। पुराणानुसारं शब्दस्पर्शात्मको वायुः। तत्राऽपि स्पर्शोऽस्य स्वकीयः गुणः तथा शब्द आकाशादागतः। यत् तेजात्मकं तृतीयावरणं तस्य दशगुणेनैव बाह्यत इदमावृतम्। यथा–

**तेजो दशगुणेनैव बाह्यतो वायुनाऽऽवृतम्।**
**वायुर्दशगुणनैव बाह्यतो नभसाऽऽवृतः।।**

**–वा०पु० ४।८४**

अयं वायुः प्राणरूपेण प्राणिष्वन्तस्थितः तथा वायुरूपेण बहिस्थः। मनुष्याणां कृते वायुः अपरिहार्यः। वायुना विना न कोऽपि जीवितुं शक्यते। पुराणेषु वायोः गन्धवती पुरी कल्पिता पश्चिमोत्तरदिशायामिति। यथा–

इमां गन्धवतीं पुण्यां पुरी वायोर्विलोकय।
वारुण्या उत्तरे भागे महाभाग्यनिधेर्द्विजः।।

–स्क०पु०, काशी०ख० १३।१

स्कन्दपुराणस्य वैष्णवखण्डस्य वैशाखमासमाहात्म्ये एकाख्यायिका वर्तते। यत्र वायुभूतस्य प्राणस्य कीदृशं महत्त्वमिति प्रदर्शितम्। अत्र शङ्खव्याधसंवादे महात्मना शङ्खेन प्राणस्य सर्वोत्कृष्टत्वं प्रतिपादितम्। यथा–

इन्द्राच्च गिरिजादेवी देव्याः शम्भूर्जगद् गुरुः।
शम्भोबुद्धिर्महादेवी बुद्धेः प्राणो बलाधिकः।।
न प्राणात्परमं किञ्चित् प्राणे सर्वं प्रतिष्ठितम्।
प्राणाज्जातमिदं विश्वं प्राणात्मकमिदं जगत्।।
प्राणे प्रोतमिदं सर्वं प्राणादेव हि चेष्टते।
सर्वाधारमिमं प्राहुः सूत्रं नीलाम्बुदप्रभुम्।।

–स्क०पु०, वै०ख०, वैशख० ११।२२।२३

आवरणेषु पञ्चमो भवति आकाशः। आकाशस्तु शब्दगुणयुक्तः। वायु आवरणात् परमाकाश आत्मकमावरणम्। वायुर्दशगुणेनैव बाह्यतो नभसावृतः। आकाशस्यानन्तविस्तारः। आकाशीयपिण्डानां मध्ये परस्परं आकर्षणजनितं प्रदूषणं सम्भाव्यते। येन भव्यन्तरिक्षे महोत्पाता भवन्ति। येषां वर्णनं पुराणेषु दृश्यते। अवशिष्टानि अन्यानि आवरणानि वर्तमानपर्यावरणेन साक्षात्सम्बद्धानि न सन्ति। तथा च उक्तञ्च पुराणेषु–

यस्मिनण्ड इमे लोकाः सप्त वै सम्प्रतिष्ठताः।
पृथिवी सप्तभिर्द्वीपैः समुद्रः सह सप्तभिः।।
पर्वतैः सुमहद्भिश्च नदीभिश्च सहस्त्रशः।
अन्तस्थस्य त्विमे लोका अंतर्विश्वमिदं जगत्।।
चन्द्रादित्यौ सनक्षत्रो सग्रहः सह वायुना।
लोकालोकं च यत् किञ्चिदण्डे तस्मिन्प्रतिष्ठितम्।।
आपो दशगुणेनैव तेजसा बाह्यतो वृताः।
तेजोदशगुणैनैव बाह्यतो वायुना वृत्तम्।।

वायुर्दशगुणेनैव बाह्यतो नभसा वृत्तः।
आकाशमावृतं सर्वं बर्हिर्भूतादिना तथा।।
भूतादिमर्हता चैव प्रधानेनावृतो महान्।
एभिरावरणैरण्डं सप्तभिः प्राकृतैवृत्तम्।।
इच्छयावृत्य चान्योन्यभरणे प्रकृतयः स्थिताः।।

–ब्रह्माण्डपु०, पादे ३।२८।३५

एवं प्रकारेण आकाशात्परं दशगुणेनैवाहङ्कारस्य आवरणं भवति। तत् परं दशगुणेनैव महत्तत्त्वस्यावरणम्। एतैः सप्तभिः प्राकृतै आवरणै अण्डमावृतम्। महान् चाव्यक्तेन प्रकृत्या आवृतः।

## उपसंहारः

एवञ्च पुराणे नैकेषु विषयेषु पर्यावरणस्य स्वरूपं तस्य समीक्षाञ्च एवं कथं रूपेण पर्यावरणस्य रक्षणं करणीयम् एतद् सर्वमपि वर्णितं वर्तन्ते। पुराणे तावत् एतद् विषये सविस्तार्यचर्चा भवति। शोधपत्रेऽस्मिन् दिङ्मात्रं तेषां समालोचना विहिता।

□□

# पुराणों में काव्यशास्त्रीय तत्त्व

## ( विष्णु धर्मोत्तरपुराण के विशेष सन्दर्भ में )

–डॉ० अपराजिता मिश्रा
सहा० आचार्य
राष्ट्रिय-संस्कृत-संस्थान
गङ्गानाथ झा परिसर, इलाहाबाद

*''पुराणवाङ्मयं भारतीयसंस्कृतेः साहित्यस्य च अमूल्यरत्नमस्ति तथाऽतीतं वर्तमानेन सह संयोजयितुं स्वर्णमयी शृङ्खला। पुराणेषु मानवोपयोगिनां समस्तज्ञानक्षेत्राणामपि समावेशः उपलभ्यते। अन्यैः विषयैः सह साहित्यशास्त्रीयाः विषयाः अपि अग्निपुराणे विष्णुधर्मोत्तरपुराणे च प्राप्यन्ते। अग्निपुराणे एकादशस्वध्यायेषु काव्यशास्त्रनाट्यशास्त्रयोः मौलिकसिद्धान्तानां महत्त्वपूर्णा सामग्री विवेचिता वर्तते। विष्णुधर्मोत्तरपुराणस्य चित्रसूत्रनाम्नि तृतीये खण्डे चित्रकला-मूर्तिकला-नाट्यकलादिकाव्यशास्त्रीयविषयाणां विवेचनमुपलभ्यते। यद्यपि एतयोः पुराणयोः काचन नवीनविचारधारा नूतनः सिद्धान्तः च न प्रतिपादितः तथापि तद् तत्कालखण्डस्य विकीर्णस्य काव्यशास्त्रस्य ऐतिह्यस्य सूत्राणां संयोजनस्य दृष्ट्या एतयोः महत्त्वं अनुपेक्षणीयम् अस्ति। शोधपत्रेऽस्मिन् विशेषतः विष्णुधर्मोत्तरपुराणे विवेचितानां काव्यशास्त्रीय-विषयाणां दृष्ट्या विमर्शः कृतोऽस्ति।''*

प्राचीन भारतीय वाङ्मय में पुराणों का एक विशिष्ट स्थान है। वस्तुतः पुराण भारतीय संस्कृति के मेरुदण्ड हैं। इनमें भारतीय संस्कृति और भारत की सत्य और शाश्वत आत्मा निहित है। पुराणों ने शास्त्रनिहित ज्ञान को जनसाधारण तक सरल भाषा में पहुँचाने का असाधारण कार्य किया। इसीलिए ये पञ्चम वेद भी कहलाए।[१] देवी भागवत में पुराणों की महत्ता को प्रतिपादित करते हुए उन्हें 'हृदय' कहा गया है–'' **श्रुति स्मृति उभे नेत्रे पुराणं हृदयं स्मृतम्** ''[२]। पुराणों में ज्ञान, विज्ञान, लोकव्यवहार, समाज एवं संस्कृति के सभी पक्षों का सांगोपांग विवेचन है।

काव्यशास्त्रीय विषयों के विवेचन की दृष्टि से पुराण साहित्य का अवलोकन करने पर विभिन्न पुराणों में रस, रीति, अलङ्कार गुण, दोष आदि से सम्बद्ध सामग्री प्राप्त होती है। परन्तु व्यवस्थित रूप से एवं विशेष रूप से काव्यशास्त्रीय विविध विषयों पर चर्चा मुख्यतः दो पुराणों में उपलब्ध होती है–अग्निपुराण एवं विष्णुधर्मोत्तर पुराण। इन दोनों ही पुराणों में काव्यशास्त्र का विशद एवं सांगोपांग विवेचन उपलब्ध होता है। पुराणों का रचनाकाल अत्यधिक विवादास्पद है। अग्निपुराण के काल के विषय में भी अनेक मत-मतान्तर हैं। अग्निपुराण में वर्णित कुछ विषय प्राचीन तथा कुछ विषय अर्वाचीन प्रतीत होते हैं जिससे स्पष्ट होता है कि अग्निपुराण यद्यपि एक प्राचीन पुराण है तथापि इसमें विभिन्न विषय बाद तक समाविष्ट किए जाते रहे हैं जिसके कारण

इस पुराण का काल निर्धारण जटिल हो गया है। तथापि विद्वानों ने इसे चतुर्थ शताब्दी से लेकर नवीं शताब्दी तक की रचना माना है।[३] अग्निपुराण में ३३७ से ३४७ अध्याय तक (ग्यारह अध्यायों में) काव्यशास्त्र के विषयों का निरूपण है। इसमें कुल ३६२ श्लोक हैं। इन अध्यायों में काव्य के महत्त्व, लक्षण, भेद, नाट्य सम्बन्धी विषय, रस, भाव, नायक-नायिका भेद, रीतियाँ, वृत्तियाँ नायिकाओं की चेष्टाओं उनके हाव-भाव, अभिनय के भेद, अलङ्कार चित्रकाव्य, प्रहेलिका, गुण-दोष आदि विषयों का विवेचन उपलब्ध होता है।

अग्निपुराण का मूल उद्देश्य ही सब विद्याओं का सार प्रस्तुत करना रहा है। स्वयं अग्निपुराण में उल्लिखित है-"आग्नेये हि पुराणेऽस्मिन् सर्वविद्याः प्रदर्शिताः"।[४] प्रसिद्ध विद्वान् श्री बलदेव उपाध्याय, श्रीवरदाचार्य एवं डॉ० विण्टरनित्ज ने इस पुराण का महत्त्व 'विश्वकोष' के रूप में स्वीकार किया है। अग्निपुराण के काव्यशास्त्रीय विवेचन से भी इस पुराण की संग्रह की प्रवृत्ति स्पष्ट प्रतीत होती है। अतः इसके काव्यशास्त्रीय विषय का स्रोत पूर्ववर्ती आचार्यों की काव्य सामग्री का संकलित रूप भी कहा जा सकता है। परन्तु इन काव्यशास्त्रीय विषयों का स्रोत जो भी रहा हो तथापि इनमें से कुछ विषय यथा अलङ्कार प्रकरण विशेषतः शब्दालङ्कारों के भेदोपभेदों का विवेचन अत्यन्त सूक्ष्म एवं वैज्ञानिक है।

संस्कृत-काव्यशास्त्र की परम्परा में आचार्य भरत (प्रथम-तृतीय शती ईसवी) से काव्यालङ्कार के रचयिता आचार्य भामह (षष्ठ-शतक पूर्वार्द्ध) के मध्य लगभग चार शताब्दियों का काल व्यवधान है। नाट्यशास्त्र में जिन काव्यशास्त्रीय सन्दर्भों को बीज रूप में स्थापित किया गया था उन्हें ही भामह ने पूर्ण प्रकर्ष के साथ अपने ग्रन्थ काव्यालङ्कार में उपन्यस्त किया। परन्तु इन दोनों आचार्यों के मध्य के काल व्यवधान में निश्चित रूप से कुछ ऐसे आचार्य हुए होंगे जिन्होंने भरत के नाट्यशास्त्र में सूत्र रूप में उपस्थित काव्यशास्त्रीय तत्त्वों का पल्लवन और सम्वर्धन किया। दुर्भाग्यवश इस विषय में कोई ग्रन्थ अद्यावधि उपलब्ध नहीं हो सका है। इस काल खण्ड की एकमात्र कृति जिसमें काव्यशास्त्र की परम्परा का उल्लेख प्राप्त होता है, वह विष्णुधर्मोत्तर पुराण है। इसमें लगभग एक हजार श्लोकों में काव्य एवं नाट्य सम्बन्धी सिद्धान्तों का विशद विवेचन किया गया है। वस्तुतः भरत से भामह के मध्य की लुप्त कड़ी को जोड़ने वाली एक महत्त्वपूर्ण रचना है-विष्णुधर्मोत्तर पुराण।

इस पुराण में चित्रसूत्र नामक तृतीय खण्ड में काव्यशास्त्र से सम्बद्ध विषय-प्रकीर्ण रूप से प्राप्त होते हैं। विष्णु धर्मोत्तरपुराण में पुरुषार्थ-चतुष्टय को काव्य के प्रयोजन के रूप में स्थापित किया गया है।[५] विष्णुधर्मोत्तर पुराण क्योंकि मूलरूप में पुराण है अतः इसमें पौराणिक परम्परा का समादर करते हुए भारतीय संस्कृति के मेरुदण्ड पुरुषार्थ-चतुष्टय विशेषकर मोक्ष को सर्वाधिक महत्त्व दिया जाना स्वाभाविक और समीचीन था। इस सन्दर्भ में आचार्य भामह, कुन्तक, विश्वनाथादि

ने भी पुराणकार के दृष्टिकोष को कुछ अधिक परिष्कृत कर अपनाया है।[६] काव्य के प्रयोजन के रूप में मोक्ष को लेकर जो चर्चा परवर्ती संस्कृत काव्यशास्त्रकारों (विश्वनाथ) में हुई उसका श्रेय भी विष्णुधर्मोत्तर पुराण को जाता है। विष्णुधर्मोत्तर पुराण में काव्य के भाषा और अभिव्यक्ति के आधार पर विभिन्न भेद किए गए। अभिव्यक्ति के माध्यम की दृष्टि से संस्कृत, प्राकृत और अपभ्रष्ट तीन भेद किए।[८] भामह ने इन भेदों का अनुगमन किया।[८] अभिव्यक्ति एवं रूप की दृष्टि से वाङ्मय मात्र का गद्यपद्यात्मक विभाग भी विष्णुधर्मोत्तरपुराण में उपलब्ध होता है।[९] भामह विष्णुधर्मोत्तर पुराण का अनुसरण कर गद्यपद्यमय मिश्र भेद का कथन नहीं करते[१०] जबकि दण्डी और अग्निपुराण को काव्य का यह तीसरा भेद अभीष्ट है।[११]

वस्तुतः विष्णुधर्मोत्तर पुराण काव्यशास्त्र के विकास के प्रारम्भिक काल के विषय में महत्त्वपूर्ण संकेत देता है अतः काव्यशास्त्र की परम्परा को समझने के लिए इसका अध्ययन महत्त्वपूर्ण है। इतना ही नहीं अनेक स्थलों पर इसकी स्थापनाएँ महत्त्वपूर्ण हैं तथा उत्तरकालीन चिन्तन को प्रभावित करती रही हैं। गद्य के अवान्तर भेद तो इस पुराण में उपलब्ध नहीं होते परन्तु पद्य का द्विविध विभाग इस प्रकार है–सुवृत्त और अतिमुक्तक। सुवृत्त के वर्णिक और मात्रिक दो भेद किए हैं। इसके प्रमुख भेद महाकाव्य का उल्लेख पञ्चदशाध्याय में विस्तारपूर्वक किया गया है। द्वादश रूपक भेदों की गणना इस पुराण की एक अन्य विशेषता है।

विष्णुधर्मोत्तर पुराण के तृतीय खण्ड के पन्द्रहवें अध्याय में महाकाव्य का उपलब्ध प्राचीनतम लक्षण है जिसमें उसके स्वरूप की विस्तृत व्याख्या की गई है।[१२] भामह और दण्डी से होते हुए आचार्य विश्वनाथ तक भी इसके स्वरूप का इसी प्रकार समस्त वर्णनीय और अवर्णनीय विषयों के विस्तृत व्याख्यान की पद्धति में विवेचन किया जाता रहा है। आचार्य भरत ने दस रूपकों की सत्ता का विधान किया जब कि विष्णुधर्मोत्तरपुराण में इस परम्परा से हटकर इनकी संख्या द्वादश कही गई है तथा उपरूपकों का कथन इसमें नहीं मिलता। यद्यपि विष्णुधर्मोत्तर पुराण का यह नाट्यविधान नाट्यशास्त्र का ही अनुवर्ती है तथापि अनेक स्थलों पर यहाँ किञ्चित् भिन्नता दृष्टिगोचर होती है। द्वादश रूपकों का विस्तृत विवेचन भी पुराणकार द्वारा किया गया है। यह पुराण ७०० श्लोकों में रूपक के सभी तत्त्वों का विस्तृत विवेचन करता है। इसका अध्ययन एक स्वतन्त्र विषय हो सकता है।

विष्णुधर्मोत्तर पुराण का समय काव्यशास्त्र के उदय का उषाकाल था। अतः महाकाव्य के विवेचन के प्रसङ्ग में भी नौ रसों का नामतः उल्लेख महत्त्वपूर्ण है। आगे नाट्य के सन्दर्भ में भी इन्हीं नामों का परिगणन करके इनकी स्थिति प्रतिपादित की गई है, परन्तु रस–सामान्य के स्वरूप में कोई विचार विष्णुधर्मोत्तरपुराण में प्राप्त नहीं होता। आचार्य भरत ने इस सम्बन्ध में जिस रससूत्र का उल्लेख किया है वह सम्भवतः विष्णुधर्मोत्तर पुराण के समय तक इतना प्रसिद्ध रहा

होगा कि पुराणकार ने इसे उद्धृत करने की आवश्यकता नहीं समझी। नाट्यविवेचन के प्रसङ्ग में सीधे ही रस-विशेष के निरूपण के साथ इस विषय को प्रारम्भ किया गया है। आचार्य भरत ने 'अष्टौ नाट्ये रसाः स्मृताः' कहकर केवल आठ रसों की स्थिति को स्वीकार किया था। ऐसी स्थिति में विष्णुधर्मोत्तरपुराण में नामोल्लेखपूर्वक नौ रसों को स्वीकार किया जाना अत्यन्त महत्त्वपूर्ण है। रस की सुखदुःखात्मकता के विषय में आचार्य भरत के अनुकरण पर ही पुराणकार की दृष्टि भी सुखदुःख उभयात्मक ही है। अन्तर केवल इतना है कि पुराणकार को यहाँ सुखात्मकादि शब्दों के स्थान पर माङ्गलिक शब्द अभिप्रेत हैं। वे शृङ्गार, हास्य और शान्त रसों को माङ्गलिक मानते हैं। रस के सम्बन्ध में भरत की भाँति चार उत्पादक रसों से अन्य चार उत्पाद्य रसों की अभिव्यक्ति होती है यह विष्णुधर्मोत्तरपुराणकार भी मानता है। इस पुराण में शान्त रस की भी पृथग् सत्ता स्वीकार की गई है।[१३] विष्णुधर्मोत्तरपुराण के तृतीयखण्ड के ३०वें अध्याय में रसों की विस्तृत चर्चा के उपरान्त ३१वें अध्याय में भाव विवेचन का प्रसङ्ग है। इस अध्याय में हासादि उन्चास भावों का कथन किया गया है।[१४] परन्तु विष्णुधर्मोत्तरपुराण में इन भावों की गणना अथवा विभाजन सम्यक्रूपेण नहीं किया गया है, मात्र अध्याय के अन्त में अनेक समवेत रसों में जिस एक का स्वरूप मुख्य हो उसे स्थायी तथा शेष को सञ्चारी मानना चाहिए, इस कथन से [१५]स्थायी और सञ्चारी भावों में सूक्ष्म विभेद का सङ्केत किया गया है।

भरत के नाट्यशास्त्र में चार अलङ्कारों का उल्लेख है। भामह तक आते-आते यह संख्या लगभग दस गुणा बढ़ गई। उनके मध्यवर्ती काल की एकमात्र कृति विष्णुधर्मोत्तर पुराण ही है, जिसमें उपमा सहित कुल अठारह अलङ्कारों का उल्लेख है। इनका उल्लेख करने के उपरान्त पुराणकार ने यह टिप्पणी की है कि उनका लेशमात्र ही प्रदर्शित किया गया है।[१६] कदाचित् कुछ और अलङ्कार भी इस काल तक विकसित हो गए होंगे जिन्हें पुराणोक्त सूची में सम्मिलित नहीं किया जा सका।

संस्कृत साहित्यशास्त्र के इतिहास में प्रारम्भिक काल से ही दोष-विवेचन उपलब्ध होता है। काव्यशास्त्र जब नाट्यशास्त्र से पृथक् होकर एक स्वतन्त्र शास्त्र के रूप में अस्तित्व में आया तो उससे पूर्व ही आचार्य भरत ने भी नाट्यशास्त्र में वाचिकाभिनय के सन्दर्भ में काव्यदोषों का विवेचन किया था। विष्णुधर्मोत्तरपुराण में यह विवेचन महाकाव्य-लक्षण के प्रसङ्ग में हुआ है।[१७] यह कोई स्वतन्त्र काव्यशास्त्रीय ग्रन्थ नहीं है। अपने से पूर्ववर्ती आचार्यों, विशेष रूप से नाट्यशास्त्र के लेखक आचार्य भरत के प्रति उसकी अधमर्णता असन्दिग्ध है, परन्तु प्रहेलिकाओं के निरूपण के सन्दर्भ में दोष-सामान्य का जो लक्षण विष्णुधर्मोत्तरपुराण में किया गया है वह उनके चिन्तन की मौलिकता को प्रकट करता है। पुराणकार के अनुसार काव्य का उद्देश्य क्योंकि सहृदय को आनन्दसागर में निमग्न कर देना है। अतः उसकी इस अनुभूति में विघ्न उत्पन्न करके जो उसे उद्विग्न करे, वही काव्य का दोष है।[१८] अग्निपुराण का दोष लक्षण तो सर्वथा इसका अनुकरण करता ही है[१९], दण्डी आदि ने भी इसी सरणि में दोष-सामान्य का स्वरूप प्रस्तुत किया है।

इस प्रकार पुराणकार ने काव्यानुभूति के सौन्दर्य में एक महत्त्वपूर्ण सङ्केत ही दिया है। यद्यपि उनके समय तक काव्य में रसादि की परिकल्पना उतने परिनिष्ठित रूप में नहीं हुई थी तथापि वे काव्य की आस्वादनीयता को भली प्रकार से समझते अवश्य थे। प्रकारान्तर से वे यह भी प्रतिपादित कर रहे हैं कि सहृदय का वह अखण्ड आस्वाद बाधित नहीं होना चाहिए। उत्तरवर्ती काल में जब विश्वनाथादि ने काव्यात्मक तत्त्व के रूप में रस की स्थापना कर इसी अनुभूति को प्रधानता दी तो उसके अपकर्षक तत्त्वों के रूप में दोषों की संकल्पना करते हुए पुराणकार का ही नया संस्करण प्रतीत होते हैं।

## निष्कर्ष

काव्य प्रयोजन की दृष्टि से चतुर्वर्ग को सर्वप्रथम यहीं पर काव्य के प्रयोजन के रूप में स्थापित किया गया है। अभिव्यक्ति एवं रूप की दृष्टि से वाङ्मयमात्र का विभाग भी विष्णुधर्मोत्तरपुराण में ही उपलब्ध होता है। बाद में इसमें 'मिश्र'' को भी जोड़ दिया गया। महाकाव्य का प्राचीनतम लक्षण भी विष्णुधर्मोत्तरपुराण में ही उपलब्ध होता है। भरत के 'दशरूपकवाद' के बावजूद द्वादश-रूपक भेदों की स्थापना पुराणकार की अपनी सूझ है। प्रहेलिका को काव्यशास्त्र का अङ्ग मानने के प्रश्न पर आरम्भ से ही विवाद रहा है। एक तरफ आचार्य रामशर्मा ने केवल प्रहेलिका को लेकर 'अच्युतोत्तर' नामक शास्त्रग्रन्थ की रचना की, तो दूसरी ओर आचार्य भामह उतनी ही उग्रता के साथ उसके काव्यत्व का खण्डन करने में सचेष्ट दिखाई देते हैं। इस विवाद के मध्य एक पूरे अध्याय में प्रहेलिकाओं का निरूपण कर, विष्णुधर्मोत्तरकार ने अपनी स्पष्ट और बेझिझक शैली में स्वमत को प्रकट किया है।

रस एवं भाव का निरूपण विष्णुधर्मोत्तरपुराण में नाटकों के सन्दर्भ में ही हुआ है, परन्तु महाकाव्य के प्रसङ्ग में भी यह स्पष्ट प्रतिपादित किया गया है कि काव्य में भी इनकी स्थिति नितान्त उपादेय है। अतः काव्यशास्त्र में इनका निरूपण करना आवश्यक हो जाता है। सर्वप्रथम शान्त की रस  के रूप में स्थापना तथा भावों के विवेचन प्रसंग में कुल भावों की संख्या का अन्ततः उन्चास की प्रतिज्ञा को पार कर जाना महत्त्वपूर्ण है, परन्तु रस सामान्य का कोई लक्षण पुराणकार नहीं देता। उपमा सहित अठारह अलङ्कारों के स्वरूप की व्याख्या भी इस पुराण में उपलब्ध होती है।

महाकाव्य के लक्षण में वर्णित बारह काव्यदोषों का निरूपण भी इसमें किया गया है। पुराणकार इस सम्बन्ध में यद्यपि आचार्य भरत के अनुगामी हैं परन्तु यह दश दोषों की सीमा का अतिक्रमण कर १२ दोषों का निरूपण करते हैं विशेष रूप से दोष सामान्य के लक्षण के सम्बन्ध में पुराणकार की स्थापना अत्यन्त मौलिक है। दोष वह है जो सहृदयों को उद्विग्न करे, यह लक्षण न्यूनाधिक रूप से दोष के वास्तविक स्वरूप को स्पष्ट करने में समर्थ है। दोषों की नित्यानित्य

व्यवस्था के बीज भी पुनरुक्त दोष के सन्दर्भ में प्राप्त होते हैं। जिसे बाद के आचार्यों ने साभार ग्रहण किया।

विष्णुधर्मोत्तर पुराण में काव्यशास्त्रीय भाग में प्रकीर्ण विषयों के अन्तर्गत छन्दोनिरूपण, प्राकृतभाषा, अभिधान कोश तथा लिङ्गानुशासन का ग्रहण किया गया है। इनमें छन्दःशास्त्र तो परवर्तीकाल में काव्यशास्त्र का अनिवार्य अङ्ग बना परन्तु अन्य प्रसङ्ग काव्यशास्त्र से सम्बद्ध नहीं हुए परन्तु इससे यह जरूर स्पष्ट हुआ कि काव्यशास्त्र के विकास के प्रारम्भिक काल में ये सभी विषय काव्यशास्त्री के अन्तर्गत समाहित थे। अतः यह निश्चितरूप से कहा जा सकता है कि विष्णुधर्मोत्तरपुराण भरत और भामह के मध्यवर्ती युग की एक महत्त्वपूर्ण कड़ी है। इसके तृतीय खण्ड में लगभग एक हजार कारिकाओं में काव्य और नाट्य से सम्बन्धित जो सामग्री विद्यमान है वह काव्यशास्त्र के इतिहास के बिखरे हुए सूत्रों को जोड़ने की दृष्टि से अत्यन्त उपादेय हैं।

## सन्दर्भ

१. छा०उप० ७।१।४
२. देवीभागवतपुराण ११।१।२१
३. अग्निपुराण में विविध विद्याएँ, लेखक–डॉ० सुनीता सैनी, पृष्ठ १८, प्रकाशन अभिषेक प्रकाशन, दिल्ली, संस्करण २००४
४. अग्निपुराण ३३।५२
५. धर्मार्थकाममोक्षाणां शास्त्रं स्यादूपदेशकम्।
पूर्वैराचरितं सद्भिर्धर्मकामार्थसाधकम्।।–३।१५।२
६. (i) धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
प्रीतिं करोति कीर्तिं च साधुकाव्यनिबन्धनम्।।–का०आ०, भामह १।२
(ii) धर्मादि साधनोपायः सुकुमारक्रमोदितः।–वक्रोक्तिजीवित १।३
(iii) चतुवर्गफलप्राप्तिः सुखाल्पधियामपि।
काव्यादेव.........।–साहित्यदर्पण १।२
७. संस्कृत प्राकृतं चैव गीतं द्विविधमुच्यते।
अपभृष्टं तृतीयं च तदनन्तं नराधिपं।।–वि०ध०पु० ३।२।९–१०
८. संस्कृतं प्राकृतञ्चान्यदपभ्रंशं इति त्रिधा।।–भामह १।१६
९. गद्यं पद्यं च धर्मज्ञ गद्यं सङ्कथया स्मृतम्।
पद्यं छन्दोविशेषेणच्छन्दश्च बहुधा भवेत्।।–वि०ध०पु० ३।२।११
१०. गद्यं पद्यं च तद्द्विधा।–का०आ०भा० १।१६
११. गद्यं पद्यं च मित्रं च काव्यादि त्रिविधं स्मृतम्।–अग्निपुराण ३३८।८
१२. एकस्य चरिदादेव तथा काव्यं प्रकीर्तितम्।
............... वर्णयेत्।।–वि०ध०पु० ३।१५।३–८

१३. शान्तो रसः स्वतन्त्रोत्र पृथगेव व्यवस्थितः।-वि०ध०पु० ३।३०।२

१४. हासाद्याः कथिता भावाः पञ्चाशत्त्वेकवर्जिताः।।-वि०ध०पु० ३।३१।१

१५. बहूनां समवेतानां रूपं यस्य भवेद्बहु।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः स्मृताः।।-वि०ध०पु० ३।३१।५३

१६. पुराणैरितावदुक्तं तव लेशमात्रम्।-वि०ध०प० ३।१४।१५

१७. महाकाव्यलक्षण।-वि०ध०पु० ३।१५

१८. उद्वेजनीयं तु सतां तदुक्तमश्लीलबन्धं सुखदं न काव्यम्।-वि०ध०पु० ३।१६।१५

१९. उद्वेगजनको दोषः।-अग्निपु० ३४७।१

□□

# पुराणेषु पर्यावरणम्

–डॉ० सुरेश पाण्डेय
सहायक-आचार्य
राष्ट्रिय-संस्कृत-संस्थान
गङ्गानाथ झा परिसर, इलाहाबाद

भारतीय पुराण विश्व के प्राचीनतम विश्वकोष हैं, जो पारम्परिक जल संचयन और वृक्षारोपण के महत्त्व पर प्रकाश डालते हैं। प्राचीन काल में नगर नदियों के किनारे बसते थे ताकि जल की असुविधा न हो। जल को देवत्व प्राप्त था। वेदों में "अप:" सूक्त है। अपः का अर्थ जल है।

जल शक्ति के विषय में अनेक पुरा कथाएँ और मिथक हैं। देवीपुराण के अनुसार वर्षा की दो रमणियाँ हैं–मेघश्री और मेघयन्तिका। इनके जल को सँजोए रखने के लिए जल सञ्चयन की ग्रामीण व्यवस्था है। सरोवर, ताल–तलैया, झील, कुण्ड, वापी, कूप आदि। मत्स्यावतारी विष्णु भगवान का महल क्षीरसागर है। विष्णु जल संरक्षण और जल संचयन हेतु कच्छप बने थे। पुराणों में इन्हें कच्छपावतारी विष्णु कहा जाता है।

जल का एक पर्याय अमृत है। प्राणी और प्रकृति का जीवन जल है। धार्मिक संस्कारों में जल को अधिक महत्त्व दिया जाता है। देवाभिषेक, शुद्धीकरण, आचमन और अर्चन में जल की अनिवार्यता बनी रहती है। शरीर की पवित्रता के लिए जल–मार्जन के समय यह मन्त्र पढ़ा जाता है–

"अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा।"

कूप, कुण्ड, सरोवर, ताल–तलैया, वापी, झील, नदी आदि जल के सञ्चित भण्डार बने। देवी पुराण के अनुसार जो लोग जल सञ्चयन के लिए तालाब, जलाशय आदि का निर्माण कराते हैं, वे पुण्य के भागी होते हैं। ग्रीष्म में जो सरोवर सदानीरा रहते हैं उन सरोवरों के निर्माता स्वर्ग का अक्षय सुख भोगते हैं। धार्मिक भावना के कारण सेठ, महाजन, रजवाड़े आदि जलाशय का निर्माण कराते थे। इस अभियान के चलते हमारा देश सरोवरों, कूपों, कुण्डों आदि से भरा था। इन जलाशयों से खेतों की सिंचाई होती थी। जल संचयन के इस विकास में पुराणों की प्रेरणा थी। रामायण काल में अनेक प्राकृतिक जल सञ्चयन के रूप में पुष्कर होते थे, जिसे ग्रामीण पोखर कहते थे। पुराणों में सप्त सरोवरों की चर्चा है।

जल के समान ही वृक्षों में जीवन होता है इसीलिए हरे वृक्षों को काटना "वृक्ष–हत्या" कहलाती है। महाभारत काल में वृक्ष पूजा का स्वर्णयुग था। श्रीकृष्ण ने इन्द्र पूजा की जगह वृक्ष पूजा पर बल दिया था, क्योंकि वृक्ष उपकार करते हैं। श्रीमद्भागवत पुराण कहता है–

पश्यतैतान् महाभागान, परार्थे कान्तजीवितान्,
वात-वर्षा तपयहिमान् महन्तो वारयन्ति नः।।

अर्थात् इन महाभाग और परोपकारी वृक्षों का महत्त्व जानना चाहिए जो हमें वायु-वर्षा और धूप से बचाते हैं। कूर्म पुराण में वृक्षों की देवी इरा का वर्णन है, वही वनस्पतियों की अधिष्ठात्री भी हैं।

वृक्षों में देवताओं का निवास होता है। नीम में पर्यावरण की देवी शीतला, महुए में देवी माहेश्वरी, नारियल में श्रीदेवी, बिल्व में लक्ष्मी, बरगद में जटाजूटधारी शंकर, पीपल में विष्णु, कदम्ब में कार्तिक, तुलसी में वृन्दा आदि। आज भी ग्रामीण अञ्चलों में इन वृक्षों का रोपण होता है। कैथ, बेर, कटहल, मदार, जामुन आदि देवी वृक्ष हैं। पीपल शनिग्रह का नियामक माना जाता है। मद्र देश की रानी मालती ने कन्या पाने के लिए वट वृक्ष की पूजा की थी। चेचक रोग से बचने के लिए नवेलियाँ नीम की पूजा करती हैं, वृक्ष पूज्य तो हैं ही, आर्थिक स्रोत के साधन भी हैं। आम्रावली से आम, कदली कुञ्ज से केले, नारिकेल उद्यान से नारियल, शूर्पारक वन से सुपारी आदि मिलती है। नीम और अरण्ड के बीज से तेल निकाला जाता है। बादाम और महुए से वनस्पति तेल का उत्पादन होता है। इमारती लकड़ियाँ वृक्षों से ही मिलती हैं। औषधीय वृक्षों से दवाइयाँ लकड़ियाँ बनाई जाती हैं। आयुर्वेदीय औषधि का आधार वृक्ष ही है। आज वृक्षों के संहार से प्रदूषण का प्रकोप बढ़ता जा रहा है। आज बाग-बगीचों का अस्तित्व खतरे में है। दूषित वायु से वातावरण विषाक्त हो रहा है। पर्यावरण के विनाश और प्रदूषण के विस्तार से जन-जीवन संकट में है। वृक्ष संरक्षण के अभाव में धरती की हरीतिमा मिटती जा रही है। कभी नन्दन, वंभ्राज, वैत्ररथ आदि पौराणिक वन वृक्षों के संग्रहालय थे। आज वे पर्वत समाप्त हो गए हैं। हनुमान जी संजीवनी बूटी लाने हिम पर्वत पर गए थे। इन जड़ी-बूटियों से प्रकाश निकलता था, वन जगमगाते थे।

भारतीय संस्कृति में वृक्ष मानव के लिए स्वास्थ्य एवं पर्यावरण के प्रमुख घटक के रूप में माने जाते हैं आयुर्वेद में इनकी विशेषता का उल्लेख मिलता है और इन पौधों के गुण-धर्म के आधार पर इनका औषधीय रूप में पर्यावरण के लिए उपयोग किया जाता है। वनस्पतियों का यही गुण-धर्म एवं उनका सदुपयोगिता उन्हें देवत्व का स्थापन प्रदान करती है। वृक्षों को देवता के समान मानकर उनकी उपासना, अभ्यर्थना की परम्पराएँ हमारी धरोहर रही हैं। वेदों में वृक्षों को पृथ्वी की संतति कहकर इन्हें अत्यधिक महत्त्व एवं सम्मान प्रदान किया गया है—सबसे प्राचीन ग्रन्थ ऋग्वेद की एक ऋचा में कहा गया है—

**भूर्जज्ञ उत्तान पदो....... ( ऋग्वेद १०।७२।४ )।**

अर्थात् हमारी पृथ्वी वृक्ष से उत्पन्न हुई है। यह भी माना गया है कि ब्रह्मा ने जल में बीज बोया और वनस्पति उपजी। ये मान्यताएँ सृष्टि से वृक्षों के प्रथम आगमन की सूचनाएँ ही नहीं देती, बल्कि इन्हें आदिशक्ति से भी जोड़ती हैं। गीता में श्रीकृष्ण स्वयं कहते हैं कि अहं क्रतुरहं

**यज्ञः स्वधाहमहमौषधम्** (९।१६) अर्थात् मैं ही औषधि हूँ तथा वृक्षों में अश्वत्थ (पीपल) हूँ– **अश्वत्थः सर्ववृक्षाणां** (१०।२६) वृहदारण्यक उपनिषद् (३।९।२८) में वृक्ष का दृष्टान्त देकर पुरुष का स्वरूप वृक्ष के समान है। दोनों में पर्याप्त समानताएँ हैं। आयुर्वेदाचार्यों की दृष्टि में देखें तो विश्व में ऐसी कोई वनस्पति नहीं, जो औषधि के गुणों से युक्त न हो। यहाँ पर वृक्षों को देवतुल्य मानकर इन्हें व्यर्थ रूप से काटने पर नैतिक प्रतिबन्ध लगाया गया है। इसलिए श्वेताश्वतरोपनिषद् में वृक्षों को साक्षात् ब्रह्म के सदृश बताया गया है–**वृक्ष इवस्तब्धों दिवि तिष्ठत्येकः**। पद्मपुराण में भगवान् विष्णु को अश्व रूप, वट को रुद्र रूप और पलाश को ब्रह्म रूप बताया गया है– **अश्वत्थ रूपी भगवान् विष्णुरेव न संशयः। रुद्ररूपी वटस्तद्दूत पलाशी ब्रह्मरूपधृक्।** महाभारत एवं रामायण में वृक्षों के प्रति मनोरम कल्पना की गई है। महाभारत के भीष्म पर्व में वृक्ष को सभी मनोरथों को पूरा करने वाला कहा गया है–**सर्वकामफलाः वृक्षाः**। धार्मिक मान्यता है कि जिस घर में तुलसी की नित्य पूजा होती है, वहाँ पर यमदूत कभी नहीं पधारते हैं–**तुलसी यस्य भवनैतत्यहं परिपूज्यते। तद्गृहं निवसन्ति कदाचित् यमकिङ्कराः**। वाराहपुराण में उल्लेख किया गया है कि जो पीपल, नीम या बरगद का एक, अनार या दो के दो, आम के पाँच एवं लताओं के दस वृक्ष लगाता है वह कभी नारकीय पीड़ा को नहीं भोगता है और न ही नरक-यात्रा करता है।

**अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दशपुष्पजातीः।**
**द्वे द्वे तथा दाऽममातुलुङ्गे पञ्चाम्ररोपी नरकं न याति।।**

महाभारत में वृक्षों को देवताओं के समान माना गया है और इसका पूजन सामग्री के रूप में भी प्रयोग की जाती है। महाभारत के एक पर्व में कहा गया है कि पर्ण और फलों से समन्वित कोई भी सुन्दर वृक्ष इतना सजीव एवं जीवन्त हो उठता है कि वह पूजनीय हो जाता है–

**एको वृक्षो हि यो ग्रामे भवेत् पर्णफलन्वितः।**
**चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः।।–आ० १५१।३३**

शास्त्रीय दृष्टि से देखें तो तीर्थ स्थानों में वृक्षों को देवताओं का निवास स्थान माना है। वट, पीपल, आँवला, बेल, कदली, पद्म वृक्ष तथा परिजात को देव वृक्ष माना गया है। भारतीय संस्कृति से धार्मिक कृत्यों में वृक्ष पूजा का अत्यधिक महत्त्व है। पीपल (अश्वत्थ) को शुचिद्रुम, विप्र, यान्त्रिक, मङ्गल्य, सस्थ आदि नामों से जाना जाता है। पीपल को पूज्य मानकर उसे अटल प्रारब्ध जन्य कर्मों से निवृत्ति कारक माना गया है। पीपल को अखण्ड सुहाग से भी सम्बन्धित किया गया है। लोक परम्परा के अनुसार सन्तान की इच्छुक स्त्रियाँ उसकी पूजा अभ्यर्थना करती हैं। मान्यता है कि पीपल की परिक्रमा करने से जन्म-जन्मान्तरों के पाप-ताप मिट जाते हैं। चित्त निर्मल होता है। अश्वत्थ की महिमा वेदों-पुराणों में जगह-जगह देखनेको मिलती है। तुलसी को

